वाणीं भजत गैर्वाणीम् !

# गैर्वाणी

## मासिकी पत्रिका

संपुटः १४ | NOVEMBER 1976 | क्रमांकः १०



नळ कार्तिकाब्दः | शकाब्दाः १८९८ | मूल्यम् ०-५० पैसाः

# विषयसूचिका







# नवम्बरस्य प्रथमा

नवम्बरमासस्य प्रथमा तिथिः अस्मिन् शा. श. वर्षे १८९८ तमे कार्तिक मासस्य दशम्यां तिथा वापतति। भारतीयानां चारित्रिकदृक्पथाभावं प्राचीनकाले परिदृश्यमान माधारीकृत्य पाश्चात्या विद्वांसो बहवः स्वीयदृक्पथे नैव भारतीयेतिहासं व्यलिखन्। इतिहासलेखकानां ऐतिहासिकी दृष्टि रेव समादरणीया न स्वाभिप्रायस्य स्वाभिमतस्य वा सिद्धान्तविधया प्रतिपादनं विधेय मित्यत्र मैव विप्रतिपत्तिरैतिहासिकसमवाये। अथाऽपि देशे देशे प्रवर्तमानैः राजकीयविधानैः तत्तद्देशानुशासने निष्णातानां स्थिरीकृतस्वाभिप्रायाणां शासकानां प्रभावानुभावैश्च प्रभवितः भवन्ति लेखका इति निश्चप्रचम्। अस्या मवस्यायां विदेशीयै पालिते भारते, बहोः कालात् पूर्वमेव लुप्तसुप्तप्राया ऐतिहासिकी दृष्टिः यदि जाग्रदवस्थां प्राप्ता तर्हि अभिनन्दन मर्हत्येव। किन्तु भारतीयात्मनः सनातनी संस्कृति रविस्सरणीया भवति ऐतिहासिक दृक्पथावलम्बने इति पुनःस्मार्यते।

नवम्बरमासप्रथमदिनं राज्यपुनर्निमाणय प्रसिद्धमासीत्। आन्ध्रप्रदेशस्य पुनर्निमितस्य द्विदशाब्दपरिमितः कालो व्यतीतः। इदानीं सर्वत्र भारते पुनश्चिन्तनीयं द्विदशाब्दात्पूर्वमेव स्व. मेघनाथसाहमहोदयस्य आध्यक्ष्येण "राष्ट्रीयपञ्चाङ्गनिरूपणाय महान् प्रयत्नः आस्थितः। पं. जवहरलाल्-प्रधानामात्यस्य काले भारते बहूनां विषयाणां संस्करणानि प्रवर्तितानि। राजनैतिकदृक्पथेन भाषाप्रयुक्तराज्यविभागः, आर्थिकदृक्पथेन,

पारिश्रामिकदृक्पथेन च द्रव्यमाने, तुलामानें, दैर्घ्यमाने च दशमलवपद्धतिश्च (Decimal Systam) समाद्रियत । एवमेव कालमानेऽपि राष्ट्रीयपञ्चांगविधानं प्रवेशितम् । तदनुसारेण शालिवाहनशकसंवत्सरस्य चान्द्रमानमासानां त्रिंशदेकत्रिंश संख्याकानां दिनाङ्कानां प्रचारः व्यवहारश्चास्थेयः । किन्तु सार्वजनिकजीवनविधाने दशमलवपद्धतिः यथा निर्निरोधप्रसरा सफला दृश्यते, तथा भाषाप्रयुक्तराज्यविभागेषु तत्तद्भाषाणां, सर्वत्र भारते राष्ट्रीयपञ्चांगविधानस्य च प्रचारो व्यवहारो वा न दरीदृश्यते। अत्र किं कारणमिति प्रश्ने समाधानं मृग्यं भवति यतोऽस्मदीयं भारतीयं तत्तत्प्रादेशिकं च अनुशासनं लोकतन्त्रायत्तम् । सर्वे वयं लोका भवामः। अस्मासु पालिताः, पालकाः कवयः, पण्डिताः, पामराः, मेधाविनः, वैज्ञानिकाः, पारिश्रामिकाः, व्यापारिणः इत्येवमादय सर्वेऽपि वर्गा अन्तर्भवन्ति । कस्य वा वर्गस्य को वा लोपः? कथं वा स संस्कार्यः? इति पर्यालोचनदशायामेव महान् कालो व्यतीतो भवति । कृतेऽपि वा निर्णये पुनरवलोकनापेक्षा जागर्ति । समीक्षितश्च निर्णयः कार्यान्वयं यदा प्राप्नोति तदा कार्यक्षेत्रगतविविधसमस्यानां अभिभवो दुर्निवारः इत्यस्ति लोकतन्त्रात्मके प्रशासने कार्याचरणगतिविधिः ।

एवं च तत्ताद्भाषाभाषिप्रदेशेषु राज्यव्यवहारे तत्तद्भाषाणां अनिवार्यविधया स्थानं प्रदेयमित्यविस्मरणीयम् । विद्यालयेषु विद्याबोधनं कार्यालयेषु कर्मकरणं च यदा प्रादेशिकभाषासु प्रवर्त्येत तदेव राज्यव्यवहारः सर्वात्मना तत्तद्राज्यभाषासु प्रचलतीति विश्वसितुं शक्यते । तदेव भाषाप्रयुक्तराज्यविभागः सार्थको भवितु मर्हति । एवं शकसंवत्सरस्य चान्द्रमानमासानां निश्चितदिनाङ्कानां च सर्वजनिकव्यवहारे यदि पुनःपुनः प्रचार-

प्रसारौ क्रियेते तर्हि राष्ट्रीयतायाः लाक्षणिके स्वरूपे शोभाऽभिवृद्धिर्भविष्यति । भारते यावत्यः पत्र-पत्रिकाः सञ्चाल्यन्ते तासु सर्वास्वपि राष्ट्रीयपञ्चांगविधानेन दिनाङ्कोल्लेखन मवश्यापेक्षितं वरीवर्ति । पत्र-पत्रिकाणां नियमेषु यदि अयमपि नियमः यत् शकसंवत्सरदिनाङ्कोल्लेखन मवश्यं कर्तव्यमिति – सर्वकारेण कृतः अन्तभूतो भवति तर्हि कालगणनायां सर्वे जनाः शकसंवत्सरीयमास-दिनांकादरणेऽभ्यस्ताः सुपरिचिताश्च भवेयुः । प्रतिद्ध पत्र-पत्रिका- सम्पादकै रयमंशोऽवधेयः । आन्ध्रप्रदेशे प्रसिद्धासु आन्ध्रप्रभादि पत्रिकास्वपि शकसंवत्सरदिनाङ्कोल्लेखनं बहोः कालादेव नैव दृश्यत इति सखेदं निवेदयामः ।

ऐतिहासिकदृक्पथं समर्थयतां भारतीयानां समेषां स्वदेशीयसंस्कृतिसभ्यतादिकं स्वभाषाभिमान - निजनित्यजीवनविधानाधिकं प्रतिकूलं नैव भवतीति सविनयं विज्ञापयामः । राष्ट्रीयता नाम जनजीवनस्रवन्तीति हि श्रूयते । राष्ट्रीयतां अपलप्य न कोऽपि इतिहासः, न कस्यापि देशस्य इति निश्चप्रचम् । अतः इतिहासलेखकानां इतिहासप्रवर्तकानां च मनसि इदमवश्य मास्थेयं यत् ऐतिहासिकप्रमाणानां केन्द्रबिन्दुः आधारशिला वा राष्ट्रीयतैव भवतीति । रामायणं महाभारतं च इतिहास इति प्रथते । भारतीयेतिहासद्वयं भारतीयात्मनः सनातनं जीवनविधानं उपपादयति । कालगणनायाः तत्र प्राधान्ये न निर्देशाभावेऽपि बाह्याभ्यन्तर प्रमाणनिकरैः तत्तत्कालविशेषस्य अभ्यूहः कर्तुं शक्यत एव । वेदानां प्राचीनतामधिकृत्य विवृण्वन् लोकमान्यो बालगंगाधरतिलकमहोदयः आन्तरिकप्रमाणनिकरैः बाह्यप्रमाणशतैश्च भारतीयै-

तिहासिकदृक्पथस्य निर्माता सम्भाव्यते। वैदिकपूर्वपुरुषाणां उत्तरध्रुवमण्डलनिवासः (आर्कटिक् हेम्) "मृगशिरा" (ओरियन्) इति आलोचनात्मके स्वीयप्रसिद्धग्रन्थद्वये तिलकमहोदयः भारतीयैतिहासिकदृक्पथं प्राचीकशत्। राष्ट्रीयता तु तस्मिन् महापुरुषे मूर्तिभूतेति न वक्तव्यतामपेक्षते।

भारतीय - राष्ट्रीय - जीवनस्रवन्त्यां नवम्बरमासस्य प्रथमा प्रमुखस्थानं भजति। भारतकांग्रेस्दलस्य पूर्वे नेतारः गान्धिमहोदयप्रभृतयः भारतीयं भाषावैविध्यं अंगीकृत्य सर्वांगीण - केन्द्रीय - शासने राष्ट्रीय भारत - भारतीं समर्थयामासुः। राजर्षिणां गान्धिप्रभृतीनां तपःपरिपाकेन भारते जनतासौकर्याय भाषाप्रयुक्तः राज्यपुनर्विभागः कृत आसीत्। नवम्बरमासस्य प्रथमदिनाङ्कः तत्तुल्यो दिनाङ्कः शकसंवत्सरस्य वा भारतीयभाषाणां विकासदिवसो भवति। ऐतिहासिदृष्ट्या भारतीयराष्ट्रीयोत्सवनां प्रमुखघटनानां च शकसंवत्सरदिनाङ्क निर्णयः भारत सर्वकारेण घोषणीय आपतितः। भारतस्य वैविध्यमिव एकात्मत्वमपि स्वरूपमिति स्मर्तव्यम्। अतः सर्वकारः सर्वेजनाश्च भारतीयता प्रवर्तने बद्धादराभूयासुरिति, सर्वाश्च भारतीयभाषाविकासिता भवेयुरिति च आशास्यते।



गतमासगैर्वाण्यां प्रदत्तायाः समस्यायाः

## पूरणम्

स्याच्चेत्सर्पस्य मण्डूकगर्भाज्जन्म तदा भुवि ।
स्यादप्येवं वैपरीत्ये सलिलादग्निरुत्थितः ॥

— ति. अ. सन्तानगोपालशास्त्री, तिरुच्चि

नाग्निर्हनुमतः पुच्छादुत्थितः प्रददाह ताम् ।
लङ्कां दग्धुं सतीनेत्र सलिलादग्निरुत्थितः ॥

— ति. एस्. सम्पत्कुमारः, तिरुच्चि

देवासुरैर्यदा शक्त्या क्षीराब्धेः मथनं कृतम् ।
तदा भयङ्करः कश्चित् सलिलादग्निरुत्थितः ॥

— जे. दक्षिणामूर्तिः, अदोनि

शंभोर्विडम्बनं श्रुत्वा समुद्भूत उमामुखम् ।
कोपानलो यथा किंनु सलिलादग्निरुत्थितः ॥

— जयेशः, पुसद्

शान्तमूर्ति र्धर्मजोऽपि क्रुद्धोभूत्सत्यमेव तत् ।
दुर्योधनस्य क्रौर्येण सलिसादग्निरुत्थितः ॥

— पि. टि. जि. रङ्गाचार्यः, पालकोण्ड

नीलमेघसमे काये निबद्धं पीतमम्बरम् ।
चकास्तीवार्णवे विष्णोः सलिलादग्निरुत्थितः ॥

— न. व. निगमान्तः, प्रोद्दुटूरु

समुद्रबन्धनं कर्तुं रामो विरहकातरः (मानसः) ।
शराग्नि र्वर्षितस्तेन सलिलादग्निरुत्थितः ॥

— मेडवरपु संपत्कुमार्, मण्डपेट

कन्नकी कुपिता साध्वी पत्या च मधुराङ्गता ।
पाण्डचस्य वचनं श्रुत्वा सलिलादग्निरुत्थितः ॥

— ति. गो. अनन्तसुब्रह्मण्यम्, तिरुपति

कार्ये च कारणं दृष्टमग्नेराप इति श्रुतिः ।
नेदमाश्चर्यजनकं सलिलादग्निरुत्थितः ॥

— पि. एम्. पद्मनाभशर्मा, तञ्जावूर्

भौतविज्ञानिना सृष्टः प्रपाते यन्त्रसाह्यतः ।
विद्युन्नामोपकृन्नित्यं सलिलादग्निरुत्थितः ॥

— विद्वान् बालगणपतिभट्टः, श्रीरङ्गपत्तनम्

काननं प्रेषितवतीं भ्रातरं कैकयीं प्रति ।
शान्तोऽपि भरतः क्रुद्धः सलिलादग्निरुत्थितः ॥

— के. सुधाकररावः, आदवानि

प्रामाणिकपरे ग्रन्थे अग्नेराप इति स्थिते ।
किमर्थ मेवं वदसि सलिलादग्निरुत्थितः ॥

— यं. कुलशेखराचार्यः, तिरुपति





# इन्दिरा विश्वविख्याता

— या. वि. देवासकरः, बरोडा

अद्य षष्टिसुवर्षाणि यस्याः पूर्णानि जन्मनः ।
जवाहरसुता दिष्टया, वर्धते विजयेन सा ॥

प्रियभारतदेशार्थमर्थशास्त्रानुसारतः ।
प्रियं पश्यति सर्वत्र तस्मात्सा प्रियदर्शिनी ॥

विदुषी सा महन्मान्या राज्यकार्यधुरन्धरा ।
स्वकौशल्यप्रभावेण, विजयस्व महोदये ॥

दुर्भिक्षनाशिनी भूयाद्ध्रुवताच्छत्रुमर्दनी ।
दूरीकरोतु दारिद्र्य मिन्दिरा प्रियदर्शिनी ।

तत्परा राष्ट्रकार्येषु, लोककल्याणकांक्षिणी ।
चिरं जीवेत्सुखं जीवेदिन्दिरा प्रियदर्शिनी ॥

भवत्पिता सुविख्यातः, प्रियदर्शी जवाहरः ।
तन्मार्गगामिनां विज्ञा, तस्मात्सा प्रियदर्शिनी ॥

# सम्पादकस्य विज्ञप्तिः



सहृदयलेखकानां सविधे गैर्वाणी सम्पादकवर्गस्य सविनयमियं विज्ञप्तिः —

१. दीर्घरचना प्रेषणं नैव कर्तव्यम्। द्वित्रपुटपरिमित विषयप्रेषणे गैर्वाण्यां प्रकाशनं सुलभतरं भवेत्।

२. स्वीयरचना - पुनःप्रेषणं यद्यभिलष्यते, तर्हि पोस्टल् - चीटिकाः यावदपेक्षं प्रेषणीयाः।

३. रचनानां पुनरवलोकनानन्तरं सम्पादकवर्गानुमता एव ताः गैर्वाण्यां प्रकाश्येरन्। अतः पुनःपुन स्तद्विषये पत्र-लेखने कृतेऽपि पत्रव्यवहारः न करिष्यते।

४. अनुवर्तमानविधया प्रकाश मपेक्षमाणानां सुदीर्घरचनानां कृते प्रथमत एव पत्र-व्यवहारः कर्तव्यः। स्वीकृतरचना एव तादृशा अनुवर्तेरन्।

लेखकाः पत्रिकानिर्वहणे विद्यमानं क्लेशजात मवगत्य सहकृत्युरिति सविनयं प्रार्थ्यते।

इति,

सम्पादकः।

# कविसम्राट् दिवंगतः

"अवरः"

आन्ध्रप्रदेशास्थानकविः, कविसम्राट्, वाग्देवीकटाक्षैकलक्ष्यतां प्राप्तः, ज्ञानपीठपुरस्कारेण सम्मानितः, ज्ञानवयोवृद्धः विश्वनाथ-सत्यनारायणः अक्टोबरमासे १८ तमे दिनांके गुण्टूरुनगरे दिवंगतः। ८२ द्व्यशीतिवर्षदेशीयः विश्वनाथकविमहोदयः कतिपयकालादारभ्यैव अस्वस्थः हृदयव्याकोचचिकित्सार्थं गुण्टूरुनगर (जनरल्) सार्वजनिकवैद्यशालां प्रापितः, हृदाघातेन शाश्वतविरामं प्राप्तवान्।

मासात्पूर्वं सेप्टम्बरमासे १४ तमे दिनाङ्के श्रीविश्वनाथ-महाकवेः ८२ वर्षाः समाप्ताः। तदीयस्य रामायणकल्पवृक्षाख्यस्य महाकाव्यस्य कृते १९७० तमवर्षीयः ज्ञानपीठपुरस्कारः प्रदत्तः।

जीवितसंग्रहः — डा० विश्वनाथसत्यनारायणः १८९४ तमे क्री. श. वर्षे सेप्टम्बर्मासे १४ तमे दिनाङ्के विजयवाडनगरस्य निकटे २० मील्दूरवर्तिनि नन्दमूरुग्रामे सम्पन्नकुटुम्बेऽजायत। स्वसमानकालिकविद्यावन्तो यथा अयं देशभक्तिपूरित स्सन् स्वातन्त्र्योद्यमे सहभागी बभूव। मछिलीपट्टणे आन्ध्रजातीयकलाशालायां प्राध्यापकश्च बभूव। अस्य महाकवेः द्वौ पुत्रौ, तिस्रः पुत्र्यः बहवः शिष्याश्च सन्ति।

क्रिकवीन्द्र घटापञ्चानन - महाकवि - शतावधानि - स्वर्गीय चेळ्ळपिळ्ळवेङ्कटशास्त्रिमहोदयस्य शिष्याणां असंख्याकानां मध्ये श्रीविश्वनाथसत्यनारायणमहोदयः स्वीय प्रतिभा-व्युत्पत्तिभ्यां आन्ध्रसाहितीजगति मध्यंदिनमार्ताण्डवत् आजीवनसन्ध्य मत्युज्ज्वलं व्यराजत। जीवनकाले दारिद्र्यस्य ऐश्वर्यस्य च परां काष्ठां आस्वादितवतोऽस्य सार्वजनिक जीवितमेव व्यतीतमिति भाति।

**स्थितप्रज्ञः** — महाकविरयं पद्मभूषण - कलाप्रपूर्ण - कविसम्राडित्यादि बिरुदभूषितोऽपि, साहित्याकाडमीज्ञानपीठादि-पुरस्कारैः सम्मानितोऽपि, "न प्रहृष्येत्प्रियं प्राप्य नो द्विजेत्प्राप्य-चाऽप्रिय" मित्यस्य निदर्शनमासीत्। प्राचीनाधुनिकसाहित्य-क्षेत्रे उभयत्र उभयविधशैलीसमुज्ज्वला कवितारीति रेतदीया। नवला - नाटक - व्यास (निबन्ध) - विमर्श (समीक्षा) - काव्य - प्रभृति विविधसाहित्यप्रक्रियासु सिद्धहस्तोऽयं महाकविः। अशेष-शेमुषीनिष्णातः प्राचीनार्वाचीनकविता निकषायमाणः कविसम्राट् विश्वनाथसत्यनारायणः न केवल मान्ध्रप्रदेशस्य अपितु याव-द्भारतस्य महाकविः अस्तंगतः इति सर्वे तत्साहितीरसज्ञाः खिद्यन्ति।

**प्रसिद्धरचनाः** — स्वर्गीय विश्वनाथसत्यनारायण महाकविना "वेयिपडगलु" (सहस्रफणाः) "रामायणकल्पवृक्षः" "किन्नेर-सानि" (किन्नरस्वामिनी) इत्यादयः प्राचीनार्वाचीन सभ्यता संस्कृतिप्रतिपादिकाः प्रसिद्धाः रचनाः प्रणीताः। तत्र विशेषतः दशाब्दत्रयपरिमिते सुदीर्घे काले निजतपःपरिपाकमिव अयं

महाकविः "श्रीरामायणकल्पवृक्ष"माविश्चकार। सहस्रफणाविष्कारादारभ्य अयं महामनीषी रामायणकल्पवृक्षप्रवर्धनपर्यन्तं आदिशेषभावमेव निश्शेषं समधिगत्य इदानीं कीर्तिशेषोऽभवत्।

शब्दब्रह्मणि निष्णातोऽयं महाकविः परं ब्रह्म अधिगच्छति स्म। कृतकृत्योऽयं महात्मा साहितीजगति विश्रान्तः शश्वत्; वयं च तदीय - कृतिभिः कृतज्ञा भवेम शश्वदिति — शान्तिः! शान्तिः!! शान्तिः!!!

[19—10—76 आन्ध्रप्रभासौजन्येन]

## गोपालस्तुतिः

ना. व. निगमान्तः, प्रोद्दुटूरु.

नवनीरदकान्तिसुन्दरं तं नवनीताशनलोलुपं नगध्रं।
नवरत्नविभूषितप्रतीकं नलिनाक्षं नरकान्तकं नमामि॥ १

वंशीविराजत्करमायताक्षं वंशे यदोर्जातमवर्ण्यरूपं।
वासो वसानं वसुदेवसूनुं पीतं प्रवन्दे वनमालिनं तम्॥ २

भजे भवनिरोधकं भगवतस्स्वरूपं विभुं,
नमज्जनभयापहं समरभीमभीष्मेडितम्।

भुजङ्गमभुजीयसद्धरितपिञ्छभास्वच्छिखं,
भुजाञ्चितहसत्प्रियं भुजगमर्दनं भूमिपम् ।। ३

सकलागमसारनिधिं सरसीरुहनेत्रमसद्द्विपकेसरिणं ।
सदयं क्षणसंहृतकंसमहं सततं कलये सवनेशममुम् ।। ४

सलीलवल्लवीविलासलालितं लसन्मुखं,
वनानिलप्रलोलकुन्तलं ललामलाञ्छितं ।
वलारिनीलबर्हमेचकाढ्य मौलिशालिनं,
जगल्लये चलज्जले दले शयान माश्रये ।। ५

प्रेमाकृष्टमुकुन्दचिन्तनपरां राधां स्वपादाम्बुज
ध्यानैकप्रवणां रहः प्रणयिनीः गोपीश्च तां रुक्मिणीं ।
भामां मानवतीं प्रसादनविधौ दक्षैः सकालोचितैः,
धिन्वञ्चाटुवचोभिरादिपुरुषः शं नो विधत्तां सदा ।।६

हृदयाकाशसञ्चार भक्तबर्हिणमोदकं ।
कृष्णमेघमहं वन्दे सुगीतामृतवर्षिणम् ।। ७

वस्त्रापहारवित्रस्तां वनितां योऽवति स्म तां ।
कौरवाणां सभामध्ये तं विना नास्ति मे गतिः ।। ८





# Samskritha Bhasha Pracharini Sabha,
## CHITTOOR (A. P.)

**RESULTS OF SEPTEMBER EXAMINATIONS, 1976.**

## नळ दक्षिणायन परीक्षा फलितानि

The following are the Register Numbers of successful Candidates who appeared for the Samskrit Examinations held on 6th, 7th and 8th September, 1976.

**PARICHAYA**

I Class:— 1 to 3 48 70 72 75 88 90
95 to 99 101 03 04 06 08 09 to 11 123 to 29
32 to 34 36 to 39 41 45 46 48 54 77 to 79
99 to201 77 85 86 88 to 91 94 to 97 305 07
to 10 12 16 17 19 to 21 26 28 30 66
411 to 14 16 29 33 37 49 77 81 571 72
86 to 90 95 98 601 02 06 08 29 32 33
76 78 95 to 98 703 06 07 08 26 30 54
to 56 63 64 67 69 70 78 80 to 83 97
98 99 830 32 37 to 39 49 50 51 901 03
17 36 to 38 42 43 45 46 51 53 1010 14
19 27 28 36 37 59 60 77 1100 02 09

28 59 64 to 69 71 76 79 86 to 88 91 96
to 99 1201 to 03 05 to 07 09 to 12 14 15 17
39 76 85

II Class:— 5 8 28 29 31 32 37 67
68 69 71 74 76 79 92 98 100 02 05
35 38 40 42 49 81 82 213 to 15 19 25
to 28 30 34 50 51 53 54 66 to 76 87
92 98to 301 03 04 06 11 18 22 29 51
60 to 65 63 to 70 98 404 23 25 27 35 36
38 44 to 46 48 75 85 554 57 58 70 73
75 to 77 89 91 to 94 96 97 600 07 09 10
23 30 34 67 70 to 73 75 77 83 709 24
25 32 39 41 60 to 62 65 66 71 75 79
803 04 to 06 20 21 29 31 33 34 40 44
47 92 94 95 902 14 18 to 20 39 to 41 44
48 49 52 57 to 60 62 64 84 1009 13 15
20 29 34 38 39 41 43 45 47 48 53
55 57 78 79 81 95 96 98 1103 04 08
10 60 62 63 72 to 75 77 78 80 81 83
84 89 1200 04 08 13 16 20 21 25 37
38 40 41 to 43 45 48 49 55 56 58 59
62 64 70 71 77 83 88 to 94 98to 1301

III Class:— 4 6 7 19 20 24 to 27 30
33 to 35 38 to 45 66 77 78 80 to 83 85 87
93 130 43 47 51 52 53 212 16 to 18 20
23 24 29 32 43 47 48 56 to 61 65 69

71 73 802 13 27 41 43 to 45 57 to 59 67
81 82 89 91 to 96 99 402 03 40 41 50
51 69 70 74 76 82 83 86 88 555 74
99 605 31 35 57 60 62 to 65 68 69 74
79 to 81 88 89 91 92 99 701 02 04 05
10 11 23 27 28 31 33 38 40 42 46
47 49 58 59 68 73 74 800 to 02 15 19
25 26 35 42 46 48 53 93 96 98 99
921 23 24 to 26 50 55 59 61 63 65 66
74 to 79 1012 16 26 30 to 33 42 44 46 49
50 to 52 54 56 58 61 80 1107 11 17 18
21 27 30 61 85 90 1218 22 23 44 46
50 to 52 57 61 75 78 95 to 97

## ABHIGNA

I Class:—196 239 45 46 78 81 83 84
407 08 10 650 53 735 to 37 859 78 908 34
1065to 72 1233

II Class:— 9 49 52 53 55 58 61 161
to 66 86 to 95 97 98 205 03 35 36 38
79 331 to 33 72 76 405 09 15 18 97 502
to 04 11to 13 15 60 62 64 81 611 614
17 to 22 24 to 27 54 to 56 715 84 85 to 89 91
807 09 11 52 54 60 62 to 65 68 69 933
35 95 1083 84 87 1138 39 1232 1306 09 to 12
15 16 19 20 29

III Class:– 10 to 12 50 51 54 56 57 59 60 63 156 58 to 60 62 63 67 to 69 203 04 08 37 74 82 336 71 73 to 75 77 to 79 406 52 to 57 96 99 501 03A 09 10 61 65 66 69 78 to 80 612 28 39 40 744 46 47 49 90 808 53 55 to 58 67 72 88 97 99 1021 24 82 85 86 88 1132 33 35 to 37 41 70 1303 05 07 08 13 14 17 18 21 to 26 28 31

## VICHAKSHANA

I Class:- Nil

II Class:- 73 113 to 16 71 72 74 76 442 58 517 to 19 21 22 82 751 875 76 911 to 13 1062 1144 to 47 1332

III Class:- 13 to 16 170 73 83 to 85 209 to 11 337 419 20 43 60 61 520 23 84 641 716 50 52 53 92 877 1000 02 25 63 64 1140 49 to 53 1333to 39

## SAMARTHA

I Class:- Nil

II Class:- 118 19 878 80 1154

III Class:- 525 to 27 879 81 1156 57

I Part:- 528 to 30 532 to 34 882 1008 1155

II Part:- 535 to 52 718 1008 73 to 76

## KOVIDA

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| I Class:– | Nil | | | | | | | |
| II Class:– | Nil | | | | | | | |
| III Class:– | 338 | 648 | 722 | | | | | |
| I Part:- | 553 | 719 | | | | | | |
| II Part:- | 17 | 64 | 719 | 888 | | | | |
| III Part:- | 17 | 64 | 120 | 647 | 719 to 721 | 885 | 86 | |
| IV Part:- | 17 | 18 | 64 | 65 | 120 | 647 | 721 | |
| V Part:- | 720 | 721 | 887 | to | 891 | | | |

The following candiates stood first in first Class in the Examination as shown below:

Parichaya - 411 Mugalla Alimelu, Tanuku.
Abhigna - 284 Lalitha Subbalakshmi



# नळदक्षिणायनपरीक्षासु September 1976

## उपयुक्तानि केन्द्राणि



(१) अनकापल्लि (२) अन्नवरम् (३) अनन्तपुरम् (४) आदोनि (५) अर्येपुरम् (६) एलूरु (७) कडप (८) कल्याणदुर्गम् (९) काकिनाड-ए (१०) काकिनाड-बि (११) काञ्चीपुरम् (१२) किर्लपूडि (१३) क्रोम्पेट (१४) कोयम्बुत्तूरु (१५) कन्दुकूरु (१६) कुम्भकोणम् (१७) गोबिशेट्टिपालेम् (१८) गुण्टूरु (१९) चित्तूरु (२०) चिन्ताड (२१) डाल्मियापुरम् (२२) तणुकु (२३) तिरुवळ्ळूरु (२४) तिरुपति (२५) तुनि (२६) तेर्लाम् (२७) तञ्जावूरु (२८) नजरत्पेट (२९) नडकुदुरु (३०) नरसम्पेट (३१) नेल्लूरु (३२) पाकाल (३३) पिठापुरम् (३४) पुदुच्चत्रम् (३५) पेदपेङ्कि (३६) पेदरावूरु (३७) पेद्दापुरम् (३८) पोलूरु (३९) प्रोद्दटूरु (४०) पोण्डूरु (४१) बापट्ल (४२) भीमवरम् (४३) मदनपल्लि (४४) मद्रास् (४५) मधुरै-ए (४६) मधुरै-बि (४७) मन्नारुगुडि (४८) मयूरम् (४९) मण्डपूडि (५०) मन्त्रालयम् (५१) राजमण्ड्रि (५२) राजमण्ड्रि (५३) राजेन्द्रनगर् (५४) रायचूरु (५५) वडुवूरु (५६) वाल्टेरु (५७) विजयनगरम् (५८) विजयवाड, (५९) श्रीकाकुलम् (६०) सकिनेटिपल्लि (६१) सर्वेलु (६२) सेलम् (६३) सोम्पेट (६४) हिट्टनाळ (६५) हैद्राबाद्

## नळ दक्षिणायन परीक्षाफलसूचि

(१९७६ सेप्टम्बर्)

| परीक्षाः | अभ्यर्थिनः | उपस्थिताः | श्रेणी प्र.श्रे. | द्वि.श्रे. | तृ.श्रे. | खण्डशः |
|---|---|---|---|---|---|---|
| परिचय | 850 | 764 | 193 | 236 | 226 | — |
| अभिज्ञ | 300 | 266 | 29 | 104 | 104 | — |
| विचक्षण | 96 | 88 | — | 29 | 46 | — |
| समर्थ | 66 | 49 | — | 5 | 7 | 32 |
| कोविद | 30 | 23 | — | — | 3 | 16 |
| आहत्य | 1342 | 1190 | 222 | 374 | 386 | 48 |

संस्कृतभाषाप्रचारिणी सभा,
10—11—76.

की. श्रीनिवासाचार्यः,
परीक्षामन्त्री.

# नल उत्तरायण - परीक्षाणां सन्नाहकार्यक्रमः

**Programme of March 1976 Examinations.**

विना विलम्बशुल्कं आवेदनपत्राणां प्रेषणीयान्तिमतिथिः 20–1–77
1 रू. विलंबशुल्केन सह आवेदनपत्राणां प्रेषणायान्तिमतिथिः 31-1-77

आवेदनपत्राणि 20 पैसमात्र - पोस्टलचीटिका (Stamps) प्रेषणे विना मूल्यं प्रेष्येरन् ।

**31–1–77 परतः प्रेष्यमाणानि**
**आवेदनपत्राणि सुतरां न स्वीक्रियेरन् ।**

समर्थकोविदपरीक्षयोः निर्णीतकेन्द्रेष्वन्यतमः स्वीकर्तव्यः ।

परिचयः रू. 2–00 अभिज्ञः रू. 4–00
विचक्षणः रू. 6–00 समर्थः रू. 8–00 खण्डशः रू. 5–00
कोविदः रू. 12–00 खण्डशः रू. 5–00

विशेषानुमतिशुल्कम् (Exemption Fee) 5–00
विलम्बशुल्कम् (Late Fee) रू. 1–00

परिचयाभिज्ञविचक्षणसमर्थपाठ्यपुस्तकानि सभायां लभ्येरन् । विशेषजिज्ञासायां 20 पैसामात्राः पोस्टलचीटिकाः (Stamps) प्रेषणीयाः ।

**प्रधानमन्त्री,**
संस्कृतभाषाप्रचारिणी सभा,
चित्तूरु (आ. प्र.)

# भोजसभा

— कंदाळ वेङ्कटरामकृष्णमाचार्यः, तिरुपति

[ पूर्वानुबन्धः ]

भोजः- (चतुर्थं पठति) स्त्रीपुंवच्च ।

वरः – स्त्रीपुंवच्च प्रभवति यदा तद्धि गेहं विनष्टम्!!

भोजः- शङ्करकवे! पूर्यतामियं समस्या "नैवाश्रितेषु गुणदोषविचारणा स्यात्" ।

शङ्करः-राजन्! तथैव! श्रूयताम्!

दोषाकरोऽपि कुटिलोऽपि कळङ्कितोऽपि,
मित्रावसानसमये विहितोच्चयोऽपि ।
चन्द्रस्तथापि हरवल्लभतामुपैति,
नैवाश्रितेषु गुणदोषविचारणा स्यात् ॥

सर्वे – साधु! साधु!

भोजः- शङ्करकवे! सम्यक्पूरिता समस्या! भवतु । भोभोः महाकवयः कन्दुकं वर्णयन्तु भवन्तः ।

वरः – अवहितो भवतु महाराजः!

एकोऽपि त्रय इव भाति कन्दुकोऽयं,
कान्तायाः करतलराग रक्तरक्तः ।
भूमौ तच्चरणनखांशु गौरगौरः,
स्वस्थस्सन् नयनमरीचि नीलनीलः ॥

भोज - साधु! वररुचे! साधु! समीचीनतया वर्णितमेतत्!

भवः – महाराज! एतदप्यवधार्यताम् ।

विदितं ननु कन्दुक ते हृदयं,
प्रमदाधर संगमलुब्ध इव ।
वनिताकरतामरसाभिहतः,
पतितः पतितः पुनरुत्पतसि! !

भोजः- साधूत्प्रेक्षितं महाकवे! साधु साधु! !

काळिः-महाराज! श्रृणोत्वेतदपि!

पयोधराकारधरो हि कन्दुकः,
करेण रोषादभिहन्यते मुहुः ।
इतीव नेत्राकृति भीतमुत्पलं,
स्त्रियःप्रसादाय पपात पादयोः ।।

भोजः - काळिदास! भवताऽपि सम्यगुत्प्रेक्षितम्! ! भवतु! अन्या-समस्या दीयते! "चरमगिरिनितम्बे चन्द्रबिम्बं ललम्बे" ।

भवः – अरुणकिरणजाले रन्तरिक्षे गतर्क्षे ।

दडीः– चलति शिशिरवाते मन्दमन्दं प्रभाते ।

काळिः-युवतिजनकदम्बे नाथ मुक्तोष्ठबिम्बे ।
चरमगिरिनितम्बे चन्द्रबिम्बं ललम्बे! !

सर्वे – साधु, साधु!

भोजः- भवतु! अन्या समस्या दीयते । एक एव पूरयत्विमाम् ।
"टंटंट ठंटं टट टंट टंटम्"!

मल्लि- महाराज! श्रूयताम्!

राज्याभिषेके मदविह्वलायाः,
हस्ताच्च्युतो हेमघटो युवत्याः ।
सोपानमार्गेषु करोति शब्दं,
टंटंट टंटं टट टंट टंटम्!!

सर्वे– अतीव सम्यक्परिपूरितम् ।

भोजः- साधु! मल्लिनाथ! साधु!

प्रती – (प्रविश्य) देव! एकः जालकः नर्मदानदीसमीपग्रामादागतः एकं शिलाखण्डमादाय देवं एवं विज्ञापयति यत् "एष शिलाखण्डः नर्मदानद्यां महाह्रदे ईषद्भ्रंशिताक्षरः दृष्टः । अस्मिंश्च किमपि लिखितमस्तीति तत्परिज्ञातु मेतत् भवद्भ्यः समर्प्यते" इति । (शिलाखण्डं ददाति)

भोजः- (दृष्ट्वा) बुद्धिसागर! परिशीलयैतत्! (इति ददाति)

बुद्धिः -(स्वीकृत्य) देव! अत्र लिखितः श्लोक इवाभाति! तस्य उत्तरार्धं च एवं वर्तते —

अयि खलु विषमः पुराकृतानां ।
भवति हि जन्तुषु कर्मणां विपाकः ॥

पूर्वार्धंतु नैव सम्यक् ज्ञायते!

भोजः- भवतु तत्कवय एव पूरयिष्यन्ति (सभाभिमुखो भूत्वा) भोः महाकवयः! एतस्य पूर्वार्धं कथ्यताम्!

अयि खलु विषमः पुराकृतानां ।
भवति हि जन्तुषु कर्मणां विपाकः ॥

भवः – (सहसा उत्थाय) श्रूयतां! महाराज!

क्व नु कुलमकलङ्क मायताक्ष्याः,
क्व च रजनीचर सङ्गमापवादः
अयि खलु विषमः पुराकृतानां,
भवति हि जन्तुषु कर्मणां विपाकः ।।

भोजः- (तत्र ध्वनिदोषं मन्वानः वदति) एतदपि शृण्वन्तु भवन्तः ।

क्व जनकतनया? क्व रामभार्या?
क्व च दशकन्धरमन्दिरे निवासः?
अयि खलु विषमः पुराकृतानां,
भवति हि जन्तुषु कर्मणां विपाकः ।।

सुकवे! काळिदास! त्व मपि पठ कविहृदयम्!

काळि:-शिवशिरसि शिरांसि यानि रेजुः,
शिव शिव तानि लुठन्ति गृध्रपादैः ।
अयि खलु विषमः पुराकृतानां,
भवति हि जन्तुषु कर्मणां विपाकः ।।

बुद्धिः–(शृत्वा, सहसा) महाराज! अस्य पूर्वार्धं महाकविभिः काळिदासैः यथा पठितं तथैवात्रापि वर्तत इवाभाति । पश्यन्तु भवन्तः ।

[अनुवर्तंते ]

# अंगारकग्रहे अमेरिकीयव्योमनौकावतरणम्

— "अवरः"

**वैकिंग् प्रथमस्य का वा इति कर्तव्यता ?**

वस्तुतस्तु भूतलकेन्द्रा त्प्रेष्यमाणः सन्देशः १९ निमेषानन्तर मेव अंगारकग्रहं प्राप्नोति । तस्य च समाधाने प्रेषिते सति, तत् १९ निमिषानन्तरमेव भूतलं प्राप्नोति । अस्या मवस्थायां वैकिंग्-प्रथमं, वैकिंग् अवतरणशकटं चेत्युभयं तावत्पर्यन्तं स्वान्त निहितानां आदेशानां कम्प्यूटर् यन्त्रजातानां च साह्येन क्रियाशीलं भवति । इदमित्थंरूपेण निर्निरोधं अप्रतिभटं च कर्मणि प्रवृत्त-मस्ति । इत्थंभूतयान्त्रिकशरीरनिर्माणे स्वकीयवैज्ञानिकप्रतिभां प्रदर्शितवतां अमेरिकाशास्त्रज्ञानां अद्वितीयमेधाशक्तिः भूरि-भूरि प्रशंसनीयाऽभिनन्दनीयेत्यत्र नैव विप्रतिपत्तिर्लेशतोऽपि ।

वैकिंग् - अवतरणनौका तत्रत्यवातावरणं परिशोधयति, शिलानां पर्वतानां चा छायाचित्राणि गृह्णाति । अंगारक-भूकम्पानुल्लिखति । अंगारकमृत्तिकां स्वकीय - दश - पद - हस्तेन गृहीत्वा प्रयोगशालायां तस्याः नानाविधपरीक्षणं करोति । तदीय-गुणानां रासायनिक - भौतिक - जीवशास्त्रीयविधानैः विश्लेषण मारचयति । अणुशक्तिचोदितेयं अवतरणनौका यथादृष्टं यथा-श्रुतं मातृनौकाद्वारा समाचारजातं भूतलं प्रेषयति । एवं वत्सर-पर्यन्तं निरन्तरं वैकिंग्-नौकया क्रियमाणान् करिष्यमाणांश्च प्रयोगान् भूतलकेन्द्रे विद्यमानैः प्रमुखविज्ञानशास्त्रविद्भिः कूलंकषं परिशील्य अंगारकग्रहरहस्यानां सर्वस्वं निकटभविष्य एव प्रकटी-कृतं भविष्यतीति आशास्यते ।

**ग्रहान्तरयानं मानवसाधनमेव —**

वैकिंग् - प्रथम - द्वितीययोः विजयपरम्परायाः अनन्तरं वैकिंग् - तृतीयं यदि भूतलात् जीववर्गं निरपायं अङ्गारकग्रहोपरितलं नयेत्, स च जीववर्गः तत्र यदि सजीवः स्यात्, तर्हि मानववैज्ञानिकप्रगतेः राजमार्गः स्थापितः स्यात्। वैकिंग् - अवतरण - नौकासदृशं, उत्तरत्र तत्र अवतरिष्यदवतरणशकटं यदि पुनः अङ्गारकग्रहोपरितलात् उत्पत्य मातृनौकया साकं पुनस्सन्धानं प्राप्य पुनरावर्तनप्रयाणं परिसमाप्य अङ्गारकमृत्तिकां, वातावरणविशेषांश्च भूतलवासिभ्यो दद्यात्।

१३७ कोटिपरिमित रूप्यकव्ययेन निर्मित वैकिंग्-प्रथमस्य ग्रहान्तरयानविजयपरम्परा सफला भविष्यतीति आशास्महे।

**अंगारकग्रहं अधिकृत्य —**

१. अङ्गारकः भूमेः कनीयान्। तस्य व्यासः ४२०० मैल् परिमितः। भूमेस्तु ७९२७ मैल् परिमितो व्यासः।

२. भूमि मपेक्ष्य विलम्बेन आत्मप्रदक्षिणं कुर्वन् अङ्गारकः प्रति प्रदक्षिणं २४ घंटाः ३७ निमिषाश्च उपभुङ्क्ते।

३. तत्र ऋतुकालाः सर्वेऽपि सुदीर्घाः। सूर्यात् भूमेश्च सुदूरं वर्ततेऽङ्गारकः। अतः सूर्यं परितः परिभ्रमणार्थं ६८७ दिनानि भवन्ति। अयमेव अङ्गारकसंवत्सरो भवति।

४. भूमिः २३½ डिग्रीः आलम्ब्य सूर्यं परितः भ्रमति चेत् अङ्गारकः २५ डिग्रीः समालम्ब्य सूर्यपरिभ्रमणं करोति। तत्र ग्रीष्मकाले सुतरा मल्पातपो भवति।

५. भूमेः चन्द्रः सुमहान्, परन्तु अङ्गारकस्य चन्द्रौ तु द्वौ। तत्र कश्चित् १४ मैल् व्यासवान्, अन्यः ८ मैल् व्यासवान्।

६. भूतले १०० किलो भारवान् पदार्थः अङ्गारकग्रहे ३८ किलो-भारवानेव भवति।

७. वातावरणं अतीव विरलं भवति। भूमण्डलं परितः विद्यमानः अयस्कान्तकवचः अङ्गारकग्रहं परितः नाऽस्ति। अत एव विश्वकिरणधूलिः अतिमात्रं अङ्गारकोपरितले पतति। तापक्रमः ऋणचिह्नेन १२२° डिग्रीमारभ्य ऋणचिह्नेन २२° डिग्री फारन्हीट् पर्यन्तं स्यादिति वैकिंग्-समूहः।

**भविष्यदूहः —**

विज्ञानशास्त्रज्ञाः अद्यतन भविष्ये साधनीयां निर्दिष्ट प्रणालीमपेक्ष्य महता वेगेन चन्द्रोपरितले पताकां प्रतिष्ठापयामास। वेगं जेतुं शास्त्रज्ञः कटिबद्धोऽस्ति। दूरं जेतुं समर्थ मेधासम्पन्नस्य आधुनिकशास्त्रज्ञस्य कालगमनवेगेन साकं अत्यधिक-वेगोऽपि स्वाधीनो भवेत्; येन अस्मिन् शताब्दान्त एव अन्तर्ग्रह-यान - व्योमनौकाः वयं द्रष्टुं शक्नुम। मानवपदनिधानं ग्रहान्तरेषु निकटतरभविष्ये एव सम्भाव्यते।

---

**अग्निस्तुतिः —**

अग्निः शृंगचतुष्टयो दिशतु शं, मेषस्थमग्निं भजे,  
यज्ञः सिध्यति चाग्निना, द्विशिरसा भूयो नमांस्यग्नये।  
अग्नेरायुरवाप्यते त्रिचरणा, दग्नेः करोम्यर्हणां,  
अग्नावाहुतितः सुवृष्टिजननं, स्वाहाप्रियाग्ने! नमः॥

— **भंटिगटि श्री चन्द्रशेखरभट्टः**, मद्रास्

---



# श्रीरामानुजाचार्यः

"अवरः"

[ पूर्वानुबन्धः ]

श्रीरामानुजः श्रीभगवदाज्ञया भगवत्कैङ्कर्यरूपं श्रीभाष्यप्रणयनं, विशिष्टाद्वैतसिद्धान्तप्रबोधनं तत्त्वप्रतिपादक विविधग्रन्थविरचनं, आलयनिर्माणं भगवदर्चाप्रतिष्ठापनं, मठानां स्थापनं, वैष्णवालयेषु आराधनाविधाने प्रबन्धगोष्ठीकल्पनेन संस्करणं चतुस्सप्ततिसिंहासनस्थापनेन अविच्छिन्नपरम्परासिद्धसम्प्रदायप्रवर्तनमित्यादिकं बहुमुखं महाकार्यक्रमं निर्वर्त्य विंशत्युत्तरशततमेवर्षे निजायुषः, पूर्णमनोरथः (११३७ क्रि. श.) स्वाचार्यचरणौ ध्यायन् परमपदं गतः ।

सर्वदेशदशाकालेष्वव्याहतपराक्रमा ।
रामानुजार्यदिव्याज्ञा वर्धतामभिवर्धताम् ।।
रामानुजार्यदिव्याज्ञा प्रतिवासरमुज्ज्वला ।
दिगन्तव्यापिनी भूयात् सा हि लोकहितैषिणी ।।

## सारसमीक्षणम्

संक्षिप्तरूपेण यदि श्रीरामानुजस्य जीवनं दर्शनं च समीक्षामहे तर्हि —

श्रीरामानुजः, यतिराज, कान्तिमत्यात्मजः, केशवानन्दवर्धनः, श्रीभूतपुरनायकः, सर्वशास्त्रार्थतत्त्वज्ञः, काञ्चीपूर्णप्रियसखः, यादवापादितापार्थवृक्षच्छेदकुठारकः, ब्रह्मराक्षसमोचकः, वेदान्तद्वयसारज्ञः, वरदाम्बुप्रदायकः यामुनांगुलिमोचकः, देवराज-

कृपालब्धषड्वाक्यार्थमहोदधिः, विभूतिद्वयनायकः, गोष्ठीपूर्ण-कृपालब्धमन्त्रराजप्रकाशकः, मालाधरार्यसुज्ञात द्राविडाम्नाय-तत्त्वधीः, पञ्चाचार्यपदाश्रयः, चतुस्सप्तति शिष्याढ्यः, प्रपीत-विषतीर्थाभ्यःप्रकटीकृत वैभवः, प्रणार्तिहराचार्यदत्तभिक्षैकभोजनः, पवित्रीकृतकूरेशः, भागिनेयत्रिदण्डकः, यज्ञमूर्तिप्रतिष्ठाता, रंगेश वेङ्कटेशादि प्रकटीकृत वैभवः, वरदाचार्य सद्भक्तः, विट्ठ-लेन्द्र प्रपूजितः, श्रीशैलपूर्ण करुणालब्धरामयणार्थकः, व्याससूत्रार्थ-तत्त्वज्ञः, बोधायनमतानुगः, श्रीभाष्यादिमहाग्रन्थ साधकः, अत एव भष्यकारः अद्वैतमतविच्छेत्ता, विशिष्टाद्वैतपारगः, कुरंगनगरी-पूर्णमन्त्ररत्नोपदेशकः, शेषीकृत रमापतिः, पुत्रीकृतशठारातिः-भाषादत्तहयग्रीवः, कूर्मनाथप्रकाशकः, श्रीवेंकटाचलाधीश शंकचक्र-प्रदायकः, नगरीकृतवेदाद्रिः, दिल्लीश्वरसमर्चितः, नारायण-प्रतिष्ठाता, सम्पत्पुत्रविमोचकः अत एव सम्पत्कुमारजनकः सुप्र-तिष्ठित गोविन्दराजः, श्रीवेंकटेश श्वशुरः, श्रीरमामखदेशिकः, गोदाग्रजः, गोदाभीष्टप्रपूरकः, दिग्विजेता, यतिपतिः जगद्गुरुः —

एवम्भूतः शेषावतारो लक्ष्मणमुनिनामधेयः श्रीभगवद्रामानु-जाचार्यः कीदृशं दर्शनं स्थापितवान् इति प्रश्ने —

(१) **तत्त्वत्रयम्** —

चित् (आत्मा) अचित् (प्रकृतिः) ईश्वरः (परमात्मा) इति।

तत्र ईश्वर एव स्वतन्त्रः। अवशिष्टं तत्त्वद्वयं तदाश्रितम्। चिदचितोः ईश्वरस्य च संबन्धः शरीरशरीरिभावरूपः। तत्त्वानां पार्थक्येऽपि परस्परसम्बन्धः अपृथक्सिद्धः। इदमेव वैष्णवमतस्य मूलसूत्रम्। विशेषणविधयाचिदचितोः ईश्वरे अपृथक्सिद्धेन सम्बन्धेन वृत्तेः ईश्वरः विशेषणविशिष्टः

एक एव भवति। तथा च विशिष्टस्य तत्त्वस्य ऐक्यसिद्धेः विशिष्टाद्वैतसिद्धान्तोऽयमुच्यते। उपनिषत्प्रतिपाद्यानन्तकल्याणगुणैकतानं परं ब्रह्मैव "विष्णुः, नारायणः" इति शास्त्रीयव्यवहारसिद्धं भवति। सकलजीवाधार स्स एव। स एवान्तर्यामीभूत्वा सर्वं प्रवर्तयति। जगत्परिवर्तनेऽपि तस्य परिवर्तनं न भवति। अन्तर्बहिश्च व्याप्य नारायणः स्थितः। स एव धर्मस्य प्रभुः, प्रवर्तकः, जीवात्मना मुद्धारकश्च। पर - व्यूह - विभवाऽन्तर्यामि - अर्चारूपेण स एव भगवान् आराध्यो भवति भक्तानाम्। जडप्रकृतिः आत्मनां तद्द्वारा परमात्मनश्च निवासस्थानं भवति। सृष्टिकाले सत्त्वरजस्तमोगुणानां प्रकाशनं भवति; सृष्टिर्नाम परिणाम एव। प्रळयकाले प्रकृतिः सूक्ष्मरूपेण तिष्ठति; न नश्यति। अन्तर्लीनभाव एव प्रळयः। सृष्टिप्रळयौ दृश्यादृश्यावस्थयोरेव रूपान्तरम्। कालोऽप्यचिदेव प्रकृतेर्भागो भूत्वा ब्रह्मणि वर्तते। आत्मनां भौतिकजीवनाय ईश्वराधीना प्रकृतिः सर्वं सम्पादयति। भगवत्प्राप्तयेऽपि सैव प्रकृतिः अनुकूला भवति। आत्मा चैतन्यसारः, ज्ञानस्वरूपः, मुक्तदशायां परिपूर्णं विकासं प्राप्नोति। बद्धावस्थायां ज्ञानं संकुचितं भवति। आत्मनां देहधारणं कर्मानुगुणं भवति। मुक्तिपर्यन्तं जन्मपरम्पराऽनिवार्या। आत्मानः असंख्याकाः। ते त्रिविधाः - नित्याः (बन्धरहिताः) मुक्ताः (बन्धान्मुक्तिगताः) बद्धाः (संसरन्तः) इति। बद्धानां जन्मपरम्परा अनुवर्तते।

(२) प्राप्यप्रापकौ —

कर्मणा, ज्ञानेन, भक्त्या च मुक्तिः साध्यते। निष्काम कर्मणा चित्तशुद्धिर्जायते। तदाऽऽत्मविचारः कर्तुं शक्यते। आत्मविचारेण (ज्ञानेन) स्वस्वरूपपरस्वरूपपरिज्ञानं निष्पद्यते।

सदा परस्मिन् भक्तिभावनया तत्प्राप्तिमभिवाञ्छति। ज्ञानवत् भक्तावपि ध्यानं प्रवर्तते। निरतिशयप्रीतिकारकमिदं ध्यानं; भक्तेः परा काष्ठा यदा सिध्यति, तदा भगवत्साक्षात्कारो भवति। शरीरपाते सत्येव पूर्णमुक्तिर्भवति। विशिष्टाद्वैतमतप्रकारेण जीवन्मुक्तिर्नाऽस्ति। भक्तिज्ञानयोर्निष्पत्तावपि कर्मानुष्ठानमवश्योपादेयमेव। वेदविहितकर्मानुष्ठानवत् भगवदाराधानं तदुपासनं चान्तं कर्तव्यमेव। कर्म स्वतः मुक्तिप्रदं न भवति।

(३) **चरमोपायः** —

भक्तिमार्गे योग्यतासिद्धिरपेक्ष्यते। विशिष्टाद्वैतं भक्तिस्थाने प्रपत्तिं चरमोपायतया बोधयति। प्रपत्तिर्नाम स एव भगवान् प्राप्यः प्रापकश्चेति विज्ञाय सर्वात्मना तस्यैव शरणवरणम्। इद मात्मार्पणापरनामधेयम्। भागवतसम्प्रदायानुसारेण मुक्तेरनन्य-साधारणी साधनसम्पत्तिः शरणागतिरेव। सर्वेऽप्यस्योपायस्य अधि-कारिणो भवितु मर्हन्ति। भगवत्संकल्पानुकूलप्रवर्तनं, प्रातिकूल्यस्य वर्जनं, रक्षिष्यतीति विश्वासः, तस्यैव साह्यापेक्षा, सविनयं आत्मसमर्पणं – इत्येवं प्रपत्तिविधानं प्रपञ्चितम्। प्रपत्तिरेव शरणागतिरित्युच्यते। ज्ञान-भक्तिमार्गौ प्रपत्ति मेव प्रापयत इत्युक्ते प्रपत्तेः श्रेष्ठता कीदृशी त्यूह्यम्। शरणागतान् भगवान् रक्षिष्यति। शरीरपातानन्तरं ते परमपदं प्राप्य भगवद्दर्शनं लभेरन्; तेन सह मोदेरन्।



एवं श्रीभगवद्रामानुज दर्शनसिद्धान्तसारः समीक्षितः ।

श्रीमते रामानुजाय नमः

श्रीमाधवांघ्रिजलजद्वयनित्यसेवा-
प्रेमाविलाशय परांकुश पादभक्तम् ।
कामादिदोषहर मात्मपदाश्रितानां,
रामानुजं यतिपतिं प्रणमामि मूर्ध्ना ॥

न चे द्रामानुजेत्येषा चतुरा चतुरक्षरी ।
कामवस्थां प्रपद्यन्ते जन्तवो हन्त मादृशाः ॥

तृणीकृत विरिञ्चादिनिरंकुशविभूतयः ।
रामानुजपदाम्भोज समाश्रयणशालिनः ॥

कल्यब्दे दिव्यकुम्भे (४११८) बुधजनविदिते वत्सरे पिङ्गलाख्ये,
चैत्रेमासे गते च त्रियुतदशदिने दीप्यमाने हिमांशौ । ॥
पञ्चम्यार्द्रासमेते सुरगुरुदिवसे कर्कटाख्ये च लग्ने,
श्रीमान्रामानुजार्य स्समजनि निगमान्तार्थसंरक्षणार्थम्

यो नित्यमच्युतपदाम्बुजयुग्मरुक्म-
व्यामोहत स्तदितराणि तृणाय मेने ।
अस्मद्गुरोर्भगवतोऽस्य दयैकसिन्धोः,
रामानुजस्य चरणौ शरणं प्रपद्ये ॥

श्रीमते रामानुजायनमः

# विज्ञप्तिः



अयि ! पाठकमहाशयाः ! संस्कृताभिमानिनः ! उदाराः ।

अस्मत्सभायाः भवनस्य पूर्वो भागः यथाकथञ्चित् श्रीमान् की।। शे।। टि. के. तिरुवेङ्कटाचार्यस्य (सभायाः भूतपूर्वप्रधानमन्त्रिणः) अविरलानितरकृषिफलतया निर्मित आस्ते। इदानीन्तु तदुत्तरभागस्य निर्माणावश्यकता अतितरां वर्तते। अद्य तु भवनसंकोचात् भाषाविषयककार्यकलापनिर्बहणमतीव कष्टतरं वर्तते। स्थलाभावात् अमूल्याः आंग्लान्ध्रसंस्कृतग्रन्था बहवः रसिकानां पठितॄणां करकमलान्यनारोहन्तः तत्र तत्र कोणेषु निद्राणस्थिति मनुभवन्तो वर्तन्ते।

सानुक्रोशमिदं वो विज्ञप्यते, यत् श्रीमद्भिर्यथोचितं, यथाशक्ति च सं. भा. प्र. सभायाः भवननिर्माणाय धनसाह्यं कृत्वा संस्कृतोन्नतेः कारणताम् भजेरन्निति।

इत्थम्,

चित्तूरु, ब. शेषाचार्यः,

१५-११-७६. प्रधानमन्त्री, सं. भा. प्र. सभा

Please mention your membership Number for
easy correspondence.

---

*R. N. 1845/60.* *Postal C. T. R. 11.*

आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-'65

Licensed to Post without Prepayment. LICENCE No 1

भारतसर्वकारेण पुरस्कृता च

# गैर्वाणी

वार्षिकम् ५–००

## प्रहेलिका



कवचपिहितकायः पीतवर्णः सितान्तः,
त्रिणयनसुहृदग्रः श्लक्ष्णदेहः सुपूर्णः ।
शतशतसहजातः मातृमृत्युस्वरूपः,
सपदि कथय विद्वन्मेऽभिधानं प्रसिद्धम् ॥

(मोचाफलानि)

---

Published by Sri N. Ramanatha Aiyar, B.A., B.L., Advocate & Secretary,
S. B. P. Sabha, Chittoor. (A. P.)
Printed by Sri K. V. Raghavan (in-charge)
at Vijaya Press, Chittoor. (A. P.) C. 1500.